शारेरम्मदकोटिकम्रसुषमा स्त्रोतायिताप्रकृता-
कार ! प्राकृतचेतनोद्धरण निर्व्याजानुकंपासुधा -
पूरोर्मीकृत शीकरीकृत जगल्लीलावतार ऊष्मदु
र्वाराभीलतराजवञ्जव वृथाव्याहिण्डनान्तस्तप -
द्भीरूप्राणिसमग्ररक्षण भरव्यालोलचेतस्त्रवत् -
कारूण्यामृत वीचिकायित दृशापाङ्ग प्रपापालिका -
पारीणायित नित्यसूरि निगमव्याख्यात सौवप्रभा
पारावार शतायुतायुत गुणस्तोमोन्मिषन्मङ्गला -
कार ! अन्योन्यजयाभिलाषुक हविर्भुक्कव्यभुक्क्रव्यभुङ् -
नीरन्ध्रोरूजहानकोभय चमू विक्रान्त कण्ठैकता -
तारस्वानजयोक्ति सन्नुत पृथङ्निर्णीत लोकैकका -
ण्डीरस्थामसुधाम बंहिमलसन्माहात्म्य ! यातुत्रसत् -
सौरस्तोमकृतार्थनादृत महामाया मनुष्याकृते !
धीराज्याहित पुत्रयागकृत तत्पुंस्पुत्र भावोररी -
कार श्लाघ्यचरित्रकोसलसुता गर्भैकमुक्तामणे !
गोराजान्वयकैरवाकरशशिन् ! कौमारलीलावितो -
दाराग्रेसर कौशिकाध्वर ! महादिव्यास्त्रसंपद्धुरा -
धीरेय ! प्रणतार्ततापसतपः प्रत्यूहकृल्लोकहिं -
सीरोड्डामरताटकासुहरण व्यालीकृतोग्रशुग !
ज्यारावश्रुतिमात्रदीर्णतरहृद्धाराशिनिर्मग्नदु
मरीच ! अन्तकनागरीकृतसुबाह्वादि द्युसद्धिद्विषत् !
काराभूतमहापचार फल भुङ्मौनीन्द्रजायाशिला -
कारापाकरणैकतान करूणागङ्गातरङ्गायित -

श्रीराराजितपादपङ्कजरजोरेणो ! पराजिज्जटा
टीराण्डीर धनुर्विखण्डन पुनः फुल्लीकृतम्लाननि -
स्सारम्मन्यविदेहमानससरोज ! अयोनिजामैथिली -
श्रीरामापरिणेत ! उद्धतरिपुक्ष्माभृत्पराजिज्जग -
च्छूरम्मन्यकुठार राममदनुत् ! स्वर्लोकभूलोकस -
त्पौरास्याब्जदिवाकर ! स्वजनकादेशानुरोधैकवि -
स्मेरस्फारमुनिव्रताचरणपारीण ! क्षमापालदृ
ङ् नीरासारतदाभिषिक्तसुवपु ! स्सौमित्रिसीताश्वित !
द्वारप्रान्तगतावरोधजनता हाहारवाऽऽपृष्टका -
न्तारस्वागम ! तन्निषादविहितस्वादूपचार ! स्वयं -
भारद्वाजकृतातिथेय ! भरतैकाभ्यर्थनादत्तसं -
सारस्वादुक पादुकायुगल ! संसीदन्निवापाञ्जलि -
स्वाराजातिथि ताततर्पण विधिव्यासक्तचेतस्क ! का -
ण्डीरस्वानुजकल्पितोटजकुटीवास्तव्य ! मौनीश्वरा -
त्मारामप्रियताभिराम ! विरूदद्वन्दारूकाकासुरो -
द्धारव्यापृत ! गौतमात्रिललना दत्तोपहार ! क्षमा -
मारीभूतकरालशूर्पणखरानासाश्रुतिच्छेदसं -
स्काराभ्युद्यतलक्ष्मणाद्भुतकृतिस्मेरास्य ! भीकृत्समि -
द्धोरामात्र शरप्रमापिंत खराद्यासंख्यसंख्योद्भट -
द्रू राक्षोनिबिरीसकोष्णरूधिरस्त्रोतश्शतक्षालित -
क्ष्मारामाचिरकाललग्नविषमत्रासैकशाद ! एणक -
न्मारीचक्षतजैकपारण परिस्फीतास्त्र ! सीतार्थदी -
नारावोन्मुखरीकृताखिलवनप्रान्त ! प्रियोन्मादसं -
चारांभोरूह पादपांसुकणिकापूतद्रुमग्रावकां -
तार ! उषर्बुध संस्कृताश्रितजटायुर्देह ! निर्मोचित -

क्रूराकारकबन्धभाव ! शबरीवैकुण्ठसंप्रापणो -
दार ! आदित्यसुताभयप्रद ! हनूमत्सेव्य ! लोकत्रयी -
वीराग्रेसर बालिमारणपुनस्संप्रापितोद्यद्वनौ -
कोराज्याधिपभाव सम्मुदितसुग्रीवस्तुत ! स्वीयसा -
मीरिक्षिप्रकृताब्धिलंघनमहालङ्कावदाह ! स्मर -
द्वारेय्यङ्गुंलिमुद्रिकार्पण परिप्रीत ! स्वपादापत -
न्मीरापान्तर सेतुबन्धनमहाकर्मण्यकापेयना -
सीराक्रान्तसुरारिपत्तन ! जयध्वानप्रवृद्धात्महुं -
काराहंयु विचित्रवीर्यगिरिभिज्जेत्रादिमानन्दित !
स्थूराग्रेसरकुंभकर्णविजयि ! न्नुद्यद्दशग्रीवसं
हाराभिक्षुभितामरादिजनता सन्तापचिन्ताभर !
श्रीराम ! अमरसुन्दरीकृतमरून्मन्दारपुष्पासवा -
सारार्द्रीकृत सुन्दराङ्ग ! हुतभुच्छुद्धात्मसीतोररी -
कारप्रीत ! विभीषणाऽऽहित महालङ्काधिपत्य ! स्तुव -
त्स्वाराण्मौलिमणीमरीचि लहरीनीराजिताशेषदे -
वाराध्य श्रुतिवेद्यपाद ! भरतानन्दस्वयञ्जातदृग् -
धाराक्षालित पादपद्मयुगल ! अयोध्याभिषिक्त ! प्रभो
कारीरीकृत नीलंनीरदवपुस्सन्दर्शनैकामृता -
साराविष्कृतपूर्णपौरसुमनः केदारपक्कस्वसं -
स्कारामोदकृतीकृताश्रितनिजत्रेतायुगप्राभाव !
प्रारब्धस्वविधेय निर्वहण सम्यक्सिद्ध संकल्प र
क्षाररञ्जित सर्वलोक सहभूशात्रुघ्नयुध्दाध्वरा
घारायत्तितशात्रव ! द्युविहसत्साकेत वासिप्रजा-
सौराज्याधिकृताभिषिक्तरिपुजित्सैतेय ! तत्तत्परि -
ष्कारैकाधि कृतानुजात्मज ! शिवान्तःपञ्जरान्तर्लस -

.कीर ! आम्नायमहार्थगुफंन पर स्यामीकिजेगीतगं -
भीरोदात्तचरित्र ! योगिहृदयैकध्येयसंवित्सुधा -
धारोल्लोल मराल ! वैष्णवमहामायावतारोपसं
हारोपस्कृतसुस्वरूप ! भगवन् ! श्रीभूमिनीलापते !
क्षीरांभोधिमरूल्लुठल्लहरिकाव्यालोल हिन्दोलिका -
कारच्छेषशयान ! नित्यचिदचिच्छारीर ! लीलात्रिपाद् -
भूरिद्युम्नविभूतिनायक ! महाग्रैवय केयूर को -
टीरोदारमसारहाररशनामाणिक्य मञ्जीरभू -
षारोचिस्सुषमायितांङ्ग ! परमव्योमैक चिच्चन्द्रिका -
पूर ! आनन्दसुधाप्रवाह ! करूणाकूपार ! संवित्कलाऽ
धार ! अनन्तवपुर्गुणाकर ! जय श्रीरामचन्द्र ! स्वभूः !

# श्रीगुरूमालिका

मूलाधारचतुर्दलाम्बुजलसज्जाम्बूनदाभस्वय -
म्भूलिङ्गाहितचित्त ! हृद्रविदलाम्भोजप्रवालप्रभा -
भुग्नेशानसमाख्यलिङ्गनिरत ! भ्रूमध्यरेखासर -
स्संजातस्फटिकोन्मिषत्परशिवाभिख्यातलिङ्गाङ्गनिश -
ध्यानानन्दसुधाधुनीलहरिकादोलामरालायित -
स्वच्छस्वान्त ! जपत्रयीहृतमहांहस्स्तोम ! लिङ्गासद् -
योगारूढशिखावतंस ! विलसत्पिण्डादिभक्तस्थली -
सञ्चारोपनिषत्प्रचार ! नवमाहेशस्थलोपासना -
निर्धूताखिलवासनासमुदय ! प्राञ्चत्प्रसादिस्थल -
प्रद्योतप्रतिभासमान ! शरणव्याहारसंपाद्यतत् -
पातिव्रत्यचरित्र ! सन्ततशिवोहम्भावनाभाविता -
त्मैक्यानन्दमरन्दतुन्दिल ! शिवाचार्यप्रतिष्ठास्पद !
श्रीमाहेश्वरपूजितांघ्रियुगल ! श्रीशैवपीठाधिप !
स्वादुस्वादुहितोपदेशसुषमाव्यालोलसंवित्कला -
सम्पत्क्षालितचेतनौघ ! दरहासस्निग्धमुग्धानन !
प्रस्थानत्रयभास्कर ! प्रणिहितान्तेवासिलोकप्रिया -
चार्य ! प्राच्यकलासमुद्धरणदीक्षादक्ष ! शास्त्रागमा -
म्नायव्योमनदीनदीष्ण ! महितायुर्वेदजीवातुक !
श्रीरञ्जन्मुदिगोण्डवंशकलशाकूपारराकासुधा -
धामन् ! पाशनितान्ततान्तजनतासन्तापदूरीक्रिया -
निध्यानैकधुरीण ! पूर्णशिवयोगास्थानभद्रासना -
सीनानन्तविभूतियोगरसिक ! त्रैविद्यवृद्धाग्रणीः
श्रेयश्शैवमतप्रचारनिरत ! श्रीकण्ठभाष्यादिम -

प्रागग्रन्थोद्धरणप्रकाशन, लघुव्याख्यान, संशोधन -
श्लाघालंघनजांघिकोज्ज्वलयश ! श्रीपापमापापया -
राध्योदात्ततपःफलायितजनु ! श्रीशेषमावल्लभ !
प्रेन्धानप्रतिभाननिर्मलकथाकल्लोललीलायित -
स्फूर्तिस्पन्दचमत्कृतोक्तिरचनासञ्चारपञ्चानन !
नेत्रग्रेसरराजलिङ्गमहितायुर्वेदवित्शङ्करा -
राध्यश्रीपितृपाद ! सूक्ष्मधिषणासम्पन्न सौवात्मजो -
त्तंसोन्मेषितकीर्तिसौभग ! गुरो ! वीरेशलिङ्गाभिध !
च्छात्रो ऽ यं भवते शिवैक्यग ! नमोवाकान् प्रशास्ते बहून् !

शुभम्

ज्योतिष्मती

हिरण्यवर्णे ! हरिणि सुवर्णरजतस्रजे !
चन्द्रे पद्मिनि श्रीदेवि प्रसीद मम सर्वदा
हिरणमयि महालक्ष्मि वरदेऽनपगामिनि
श्रीचक्रपीठसाम्राज्ञि प्रसीद
अश्वपूर्वे रथमध्ये हस्तिनादप्रबोधिनि
पद्मे मादेवि श्रीदेवि प्रसीद
देविकायै नम स्तुभ्यं सोस्मितायै नमोनमः
आर्द्रे ज्वलन्ति श्रीदेवि प्र -
तृप्ते हिरण्यप्राकारे तर्पयन्ति परात्परे
पद्मे स्थितेऽम्ब श्रीदेवि प्र -
पद्मवर्णे महालक्ष्मि प्रभासे यशासे रमे
चन्द्रे ज्वलन्ति श्रीदेवि प्र -
देवजुष्टे नम स्तायै उदारायै नमो स्तुते
आदित्यवर्णे श्रीदेवि प्र -
पद्मनेमे महालक्ष्मि कीर्ते त्रृद्धे नमो स्तुते
अन्तर्यामिणि श्रीदेवि प्र -
गन्धद्वारे दुराधर्षे नित्यपुष्टे करीषिणि
स्पन्दसुन्दरि श्रीदेवि प्र -
वागाकूते मनःकामे पशूनां रूपभूमिके
सत्ये श्रीदेवि श्रीमातः प्र -
अन्नस्य यशसे मात्रे नम स्तुभ्यं हरिप्रिये
पद्ममालिनि श्रीदेवि प्र -

यष्टे तुष्टे पुष्करिणि सुवर्णे पिङ्गले नमः
हेममालिनि श्रीदेवि प्र -
नम स्सूर्ये नम श्चन्द्रे हिरण्म य्यग्निवर्णिनि
श्रीमात श्श्रीमहादेवि प्र -
राजराजेश्वरी कोटि शक्तिबिन्दुमहाम्बुधे
संवित् स्यन्दिनि श्रीदेवि प्र -
सुषुम्णा पीतपाथोजत्रिकोणपुरसुन्दरि
सिंहवाहिनि श्रीदेवि प्र -
स्वापाङ्गलेशसंसृष्टकोटित्रिपुरसुन्दरि
सहस्रशीर्षे श्रीदेवि प्र -
तत्त्वारविन्दसन्दोहविहारचतुरक्रमे
शेषशायिनि श्रीदेवि प्र -
सृष्टिस्थिति क्षयतिरोधानानुग्रहकारिणि
सावित्रिमात श्श्रीदेवि प्र -
षडाधारापवरक देहगेहविराजिते
अनन्तलक्ष्मि श्रीदेवि प्र -
चतुष्पीठी समिन्धानसंवित् शुद्धस्वरूपिणि
सर्वसाक्षिणि श्रीदेवि प्र -
व्यस्ताव्यस्तमनोहारिपदविन्यासभासुरे
विद्याधिदेवि श्रीदेवि प्र -
स्वभ्रू भङ्ग समुत्पन्नकोटिब्रह्माण्डमण्डले
सन्तानलक्ष्मि श्रीदेवि प्र -
घोराट्टहाससन्त्रासद्रवद् दैत्येन्द्रमण्डले
संग्रामलक्ष्मि श्रीदेवि प्र -

सूर्येन्दुवह्निकोट्योघनियुतार्बुदभास्वरे
सर्वतोमुखि श्रीदेवि प्र -
नवद्वारपुरोद्दामदीप्तिचैतन्यवाहिनि
संसारलक्ष्मि श्रीदेवि प्र -
पूर्णस्तिमितषाङ्गुण्य चिदानन्दमहोदधे
सौभाग्यलक्ष्मि प्र -
बालाकोटि कराम्भोज चञ्चच्चामरवीजिते
ऐश्वर्यलक्ष्मि श्रीदेवि प्र -
त्रिपुरासुरसंहार रंहश्शक्तिसमुज्ज्वले
वैकुण्ठलक्ष्मि श्रीदेवि प्र -
पादपांसुपरामृष्ट श्रीचक्रपुरवीधिके
अनन्तलक्ष्मि श्रीदेवि प्र -

सहस्रार सरोजातबिन्दुमण्डलमोहिनि
कल्याणलक्ष्मि श्रीदेवि प्र -
शतरूद्रहरे देवि नारायणकुटुम्बिनि
त्रैलोक्य लक्ष्मि श्रीदेवि प्र -
समस्तचिदचिद्भेदतन्त्रयन्त्रविधायिनि
मुकुन्दपन्त्रि श्रीदेवि प्र -
कोणत्रयोल्लसत्कामरूपपीठवि निद्रिते
संविन्मोहिनि श्रीदेवि प्र -
स्वाधिष्ठान महाचक्रषड्दलस्पन्द सुन्दरि
प्रद्युम्नपत्नि श्रीदेवि प्र -
दशारच्चक्रसञ्चारलीलोदञ्चितविभ्रमे
वनमालिंनि श्रीदेवि प्र -

द्वादशारमहापूर्णगिरिपीठविराजिते
बिन्दुसुन्दरि श्रीदेवि प्र -
जालन्धरमहापीठवासरासिक्यरञ्जिते
बिन्दुमालिनि श्रीदेवि प्र -
ओड्याणपीठसम्पन्न पारमैश्वर्यशोभिते
देवाधिदेवि श्रीदेवि प्र -
पाहि मा मायुधै स्सर्वै र्दिक्षु सर्वासु सर्वदा
सर्वेभ्योऽपि भयेभ्यश्च वीरलक्ष्मि नमोस्तुते
अन्धकत्रिपुरक्रव्यान्मर्दिनि श्रीजनार्दनि
जयं देहि श्रियं देहि वीरलक्ष्मि नमोस्तुते
रक्तबीजहरे शुम्भनिशुम्भ मदमर्दिनि
अभयं सर्वतो देहि वीरलक्ष्मि
वाचां देवि धियां देवि श्रियां देवि हिरण्मयि
वाचं देहि धियं देहि वीर
क्लेशकर्मविपाकादि दूषितां चेतनावलिम्
पाहि पाहि जगन्मातः सर्वलोकैकसाक्षिणि
चेतनानां जगन्मात श्चैतन्यस्तन्यदायिनि
पाहि पाहि पराशक्ते सर्वलोकैक शेषिणि

आधारसरसीजात तप्तकार्तस्वरप्रभे
पाहि पाहि जगन्मातः सर्वलोककुटुम्बिनि
अनाहत पयोजातविद्रुमद्युतिमालिनि
पाहि पाहि जगन्मातः सर्वलोक हितैषिणि
आज्ञाचक्रसरोजात शुद्धस्फटिकविद्युते
पाहि पाहि जगन्मातः सर्वलोकविधायिनि

सहस्रारसरोजातबिन्दुमण्डलमाहिनि
पाहि पाहि जगन्मातः सर्वलोकेश्वरेश्वरि
बालातपहसत्कान्तिकान्तकार्तस्वराम्बरे
पाहि पाहि जगन्मातः सर्वलोकशुभङ्करि
मन्दस्मितशुचिज्योत्स्नाविलसन्मुखमण्डले
पाहि पाहि जगन्मातः सर्वलोकानुरञ्जनि
क्लेशकर्माद्यसंस्पृष्टपूर्णषाड्गुण्यविग्रहे
पाहि पाहि जगन्मातः सर्वलोकैकरक्षिणि
दुस्तरापारसंसार स्रोतोमग्नैकतारिणि
पाहि पाहि जगन्मातः सर्वलोकोपकारिणि
नित्यनिर्दोषनिस्सीमकल्याणगुणभासुरे
पाहि पाहि जगन्मातः सर्वलोकनिभालनि
आकारदेशकालादिपरिच्छेदविवर्जिते
पाहि पाहि जगन्मातः सर्वलोकविहारिणि
अविद्याविधुरानन्दस्वच्छस्वच्छन्दचिद्घने
पाहि पाहि जगन्मातः सर्वलोकावबोधिनि
सुध्यानामृतनिष्यन्दक्षालिताशेषवासने
पाहि पाहि जगन्मातः सर्वलोकैकपावनि
निरंभोदाम्बराभासे निष्पन्दोदधिसन्निभे
पाहि पाहि जगन्मातः सर्वलोकावमर्शिनि
स्वच्छस्वच्छन्द चैतन्यसदानन्दमहोदधे
पाहि पाहि जगन्मातः सर्वलोकविभावनि
दिव्यशान्तोदितानन्दषाड्गुण्योदयविग्रहे
पाहि पाहि जगन्मातः सर्वलोकानुशीलिनि
सूक्ष्मां सूक्ष्मतरां सूक्ष्मतमां पञ्चादशाक्षरीम्

कलां कुण्डलिनीं देवीं परां वाच मुपास्महे
अन्तश्शब्दात्मसञ्जल्प स्वाभिरूपविलक्षणाम्
नित्यानपायिनीं वन्दे निरवद्यां महाश्रियम्
सूर्यमण्डलदेदीप्रां चन्द्रमण्डलभासुराम्
विद्युन्मण्डलरोचिष्णुं महालक्ष्मी मुपास्महे
तारामण्डलबंहिष्ठां मग्निमण्डलपिङ्गलाम्
हिरण्यमण्डलोन्निद्रां महालक्ष्मी मुपास्महे
ज्योतिर्मण्डलसोन्मेषां तमोमण्डललासिकाम्
वियन्मण्डलकिर्मीरां महालक्ष्मी मुपास्महे
सत्यं बृहद् ऋतं दीक्षां तपो ब्रह्म क्रतुं परम्
विवृण्वतीं महालक्ष्मीं परां शक्तिं भजामहे
वस्तुत्रयी मभिव्याप्य द्योतयन्तीं चिदाकृतिम्
वादत्रयस्य व्याख्यात्रीं परां शक्ति मुपास्महे
तां स्तानास्थाय चोपाधीन् स्फुरत्तातारतम्यतः
चेतयन्तीं जनान् वन्दे परां शक्तिमृतम्भराम्
समुद्धरन्तीं क्षेत्रज्ञान् मायामोहभ्रमान्धुतः
स्वरूपशक्तिं श्रीदेवीं महालक्ष्मीं स्तवीमहे
प्राजापत्यान् दमं दानं दयां ब्रह्ममुखेन च
शासतीं शाश्वतीं देवीं महालक्ष्मी मुपास्महे
आर्षप्रातिभरूपेण चतुर्व्यूह श्च दर्शनाम्
बोधयन्तीं पराशक्तिं महालक्ष्मी मुपास्महे
पराशक्तिं विराट्शक्तिं राष्ट्रशक्तिं महाश्रियम्
व्यष्टिशक्तिं महालक्ष्मीं चतूरूपां भजामहे
राज्यतन्त्र मुपाधाय मात्स्यन्यायहतान् जनान्
अराजकानवन्तीं तां राष्ट्रश्रेयःप्रदां भजे

वागादिकलहव्याजात् परमार्थं विवृण्वतीम्
सर्वान्तर्यामिनीं श्रौतीं महालक्ष्मी मुपास्महे
द्विधा वयुन मास्थाय विभिन्नाकृतिभेदतः
निग्रहानुग्रहौ लक्ष्मीं कुर्वतीं ता मुपास्महे
तापज्वालासमालीढांन् बहुदुःखहतान् जनान्
अवन्तीं श्रीमहालक्ष्मीं परां शक्तिं भजामहे
यतो निश्रेयसस्य स्यात् सिद्धि रभ्युदयस्यच
चोदनालक्षणां धर्मरूपां तां श्रिय मीड्महे
शरीरेन्द्रियबुद्धिभ्यो भिन्न मात्मान मादरात्
चेतयन्तीं सदानन्दचिद्घनां स्तुमहे श्रियम्
जन्माद्यस्येति सूत्रादिप्रतिपाद्य स्वलक्षणाम्
अनन्तशक्ति मीशानां जगतां श्रीश्रियं भजे
विपर्यय मपाकृत्य बन्धमुक्तिं करोति या
चिच्छक्तिं च पराशक्तिं वन्दे तां परदेवताम्
विभावाना मधिष्ठानं प्रभावानां त्व मास्पदम्
त्वमेवाम्बानुभावाना मवलम्बो हिरण्मयि
परा शक्ति र्व्यूहशक्ति श्शक्ति र्विभवसंज्ञिता
अन्तर्यामिन्यहो शक्ति रर्चाशक्ति स्त्वमेव हि
नैकानेकभ्रमाधायिपात्रच्छन्न मपावृणु
ऋतम्भराप्रसादेन सत्यं तत्व मबाधितम्
पञ्चाग्निहोमकुण्डेषु हुतान् जीवान् मुहु मुहु :
उज्जीवयसि वात्सल्यात् सर्वशेषिणि पद्मिनि
त्वमेवैकाम्ब द्विपदा तक्षन्ती च चतुष्पदा
अष्टापदा नवपदा मिमीषे सलिलानि वै

त्वमेव तारा बौद्धानां भौतिकी जडवादिनाम्
पद्मावती च जैनानां सांख्यानां प्रकृतिः प्रसूः
अणुशक्ति स्तार्किकाणां स्फोटिनी शब्दवादिनाम्
अदृष्टशक्तिःश्रौतानां मायाऽ स्यद्वैतिनां रमे !
शाक्तेयानां विभिन्नानां दशविद्या स्वरूपिणी
शैवाना मपि नैकेषां परा शक्ति श्शिवाऽसि च
वैष्णवानां स्वरूपाख्या शक्तिः पुरूषकारिणी
एवं दार्शनिकै र्भिन्नै र्नामरूपै रूपास्यसे
सृष्टि स्थेमक्षयादीना मनुरोधेन भार्गवि
भारतीपद्मिनीदुर्गाभूमिकाभि र्विभाससे
प्रत्यक्षमात्र मात्मानं देहं भूतचतुष्टयम्
मनुते भौतिकंसौख्यं चार्वाकी मम शेमुषी
आर्यसत्यानि चत्वारि त्रिरत्नानि कदाचन
सौगतानि हितानीति मनुते ऽम्ब मति र्मम
सम्यग् बुद्ध्वाजिनप्रोक्तान् पदार्था नास्रवादिमान्
रत्नत्रय मनुष्ठातुम् ईहतेमेमतिः प्रसु !
उपादानं त्वमेवाम्ब प्रकृतिं जगदात्मना
भोगापवर्गयोर्ज्ञानां परिणम्रा मुदीक्षसे
महदादिविशेषान्तं प्रधानं त्वं नियच्छसि
स्वस्वकर्मानुरोधेन बन्धं मोक्ष ञ्च यच्छसि
चित्तवृत्ती र्न जानेऽहं संस्कारान् चित्तभूमिकाः
न जाने योगतत्वञ्च त्वामेव शरणं गतः
क्लेशकर्मविपाकाद्यै रपरामृष्टरूपिणि
क्लेशकर्मविपाकादिभ्यो मोचयाम्ब नमोऽस्तुते

अध्यारोपापवादौ वा न जाने त्रिविधा मपि
सत्तां बिवर्तं माया ञ्च तत्वज्ञानं प्रदेहि मे
पञ्चभेद परिज्ञानात् मुक्ति र्भवति देहिनाम्
इत्याकलयते चित्त तत्व ब्रूहि हिरण्मयि !
भिन्नानां पञ्चधा देवि विष्णुपारम्य वादिनाम्
आश्रये कतमं भक्त्या तत्त्वं ब्रूहि हिरण्मयि !
कार्यकारणयोगान्वा विधिं दुखान्त मेव वा
न जानामि महादेवि त्वा मेव शरणं गतः
पञ्चकञ्चुकविज्ञानं नच शक्तिसमञ्चितम्
सविमर्शं प्रकाशञ्च न जाने त्रिकदर्शनम्
त्रिविधा न कलान्नैव पशून् जाने चतुर्विधान्
पाशान् पतिं न जानेऽहं त्वामेव शरणं गतः
देशकाल पदार्थात्मा यद् यद् वस्तु यथा यथा
तत्तद्रूपेण बाभासि त्वां श्रया म्यमृतां कलाम्
गायत्री त्वं हि सावित्री ज्ञान मिच्छा क्रियाऽसि च
परा कुण्डलिनी शक्ति र्मातृका मन्त्ररूपिणी
चिच्छक्ति र्ब्रह्मणोऽसि त्वं, नैकक्षेत्रेषु दीप्यसे
त्वं हि क्रिया भगवती परिस्पन्दैकरूपिणी
कलाकाष्टामुहूर्तादि कालचक्रप्रवर्तिकाम्
रूद्रादित्य सोमाग्नि विश्वदेवात्मिकां भजे
हृत्पुण्डरीकमध्यस्थां मात्मचैतन्यरूपिणीम्
ग्रहनक्षत्रतारादिज्योतीरूपां श्रियं भजे
ब्रह्मस्तुतां ब्रह्मरूपां पाशाङ्कुशधनुर्धराम्
विश्वसम्मोहिनीं मायां भजे मङ्गलदेवताम्
शब्दब्रह्ममयी माद्यां मूलप्रकृति संज्ञिताम्

सर्वधर्ममयीं विष्णो र्भिन्नाभिन्नां भजे श्रियम्

लक्ष्मीं जयां कीर्ति मनन्तरूपां माया मुदारा मदितिं वरेण्याम्

सहस्रपाथोजमरन्दमत्तां विश्वारणिं त्वां शरणं प्रपद्ये

सहस्रशीर्षाञ्च सहस्रनेत्रां सहस्रपादा ञ्च सहस्रबाहूम्

विश्वाकृतिं विश्वनृणां शरण्यां विश्वारणिं त्वां शरणं प्रपद्दे

ज्योतिष्मतीं सागररजकन्यां स्वाहां स्वधां सर्वजगज्जनित्रीम्

श्रीचक्रसिंहासनसार्वभौमीं विश्वारणिं त्वां शरणं प्रपद्ये

सर्वायुधां सर्वजनार्तिहन्त्रीं सर्वोपकारप्रवणैकशीलाम्

सर्वेश्वरीं शक्रशिवादिवन्द्यां विश्वारणिं त्वां शरणं प्रपद्ये

त्रिकूटपीठे तरूणार्कदीप्रां ताराकृतिं वह्निशिखाञ्च नाभौ

निटालपीठे तुहिनांशुरूपां विश्वारणिं त्वां शरणं प्रपद्ये

हिरण्यवर्णां हरिणीं हिरण्मयीं करीषिणीं हस्तिनिनादबोधिनीम्

ऋद्धिं प्रभासां महसा ज्वलन्तीं विश्वारणिं त्वां शरणं प्रपद्ये

आर्द्रां मुदारा मनुतर्पयन्तीं तृप्तां प्रशस्तां रथमध्यरम्याम्

षाड्गुण्यदीप्रां त्रिगुणातिभूमीं विश्वाकृतिं त्वां शरणं प्रपद्ये

या मग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम्

दुर्गा मध श्रौतगिरो वदन्ति विश्वारणिं त्वां शरणं प्रपद्ये

सरस्वतीं सर्वगुणावदातां समस्तशब्दार्थविवर्त भूमीम्

प्रज्ञास्फुरत्ताप्रतिभासमाख्यां विश्वारणिं त्वां शरणं प्रपद्ये

भूतेषु सर्वेषु पदं निधाय भृंगीव नादं वितनोषि लोके

वर्णानि सर्वाणि करोषि चावि र्विश्वरणिं

हरन्ति भक्त्याऽ मलया च योगिनो हरिं नयन्ती लसति क्रियासु

सता मघं या हरति श्रितानां वि

वृणाति विश्वं सकलं च सुष्ठु या ययासृताभान्ति समस्तलोकाः

सृजत्यजस्रं च सुवर्णमालां वि

चंक्रम्यमाणाहृदये प्रजानां विद्रावयस्यार्ति मुपाश्रितानाम्
चित्ते द्रवं चन्द्रव दादधासि वि
हिरण्मये व्योम्नि परे प्रकृत्याः इन् त्से तथा शब्दमयात्मना च
त्रय्यादिषु त्वं परिभासि मात र्वि
चक्राणि विद्योतयसीनभासा चक्रस्थिता पद्मिनि योगभाजाम्
चक्रेश्वरी दीव्यसि चक्रपाणि : वि
शुभाशुभं लक्षयसे जनुष्मतां त्रिप्रेरणी लासि मिनोषि मासि
क्षिणोषि पापं क्षमसे ऽ परादधृन् वि
प्रविश्य नाडीषु करोषिनादं शताङ्गवद् व्योमबिले करेणुवत्
उपासकाना मनुरौषि पद्मे वि
बुद्ध्यादिरूपे नगरेऽश्वरूपा पूरूपिणी चास्यध वाहिनी च
अश्वेव नादं विदधासि पूर्वं वि
शृणासि तापं शरणं गतानां शृणोषि वाचं करूणां शृणासि
विश्वं गुणै स्त्वं शरणं जगत्या वि
आश्रीयसे शक्तिभि राश्रिता हरिं शक्ते : प्रकाशं विदधासि शंतमा
शान्ता सि पश्यासि च मध्यमासि वि
बुद्धे स्सदा प्रेरणिकासि वैखरी सर्वाण्यभीष्टान्यपि रासि सर्वै :
आश्रीयमाणा सि, हरे श्शरीरं वि
मानै रशेषै रपि मीयसे त्वं त्वय्येव माति प्रलये समस्तम्
त्वा मेव माया शरणं प्रपद्यते वि
ददासि कामान् सकलान् समस्तकर्माणि पा सीश्वरिशार्ङ्गपाणेः
देवी त्वमेव प्रियवल्लभासि वि
त्वमेव वेदैः प्रतिपाद्यसेंब ब्रह्मात्मनाभासि समस्तभावान्
सृज स्यव स्यत्सि पुर स्तिरो सि वि

अम्बोदिति त्वं, त्वदधीनमस्य स्मितं, हितां ते प्रकृतिंवरेण्याम्
सत्त्वैकभूमिं मुनयोभजन्ति वि
अधोमुखान्निस्सृतया शिरोम्बुजात् सुधास्रवन्त्या ललिताभिषिच्यसे
त्वं द्रावय स्यार्तविषाद मारात् वि
भूतान्तरभ्रे ज्वलसित्विषात्वं निरञ्जना भासयसे जगन्ति
सदाऽशिखापि त्रिशिखाविभासि वि
स्पर्शात्मना त्वं शरदृक्शिखासि त्रेधा तथा भार्गवि सप्तधा च
वपुस्स्थिता प्राणिगणस्य भासि वि
प्रीता हरौ, तर्पयसिञ्चितानां नाडीसरिज्जुष्टवपुःपयोधिम्
प्रणानिलप्रेरणयाररसै स्त्वं वि
सन्तोषयस्यात्मगुणै, र्मुरारिं हरे र्गुणै स्तुष्यसि तुष्टिरूपा
भूतेषुसर्वेषु विभाससे त्वं वि
कालाभिधं पद्म मधिस्थिता त्वं समस्तकालं कलय स्यभीक्ष्णम्
पद्मे स्थितां त न्निगदन्ति सन्तः वि
जीवप्रधानेश्वरपद्मतत्त्वं विद्योतयस्यात्ममहोमहिम्ना
विभाति मूर्ति स्तव पद्मवर्णै : वि
देवेन जुष्टा हरिणापि देवै रुपास्यसे वाङ्मनइन्द्रियाणि
तव प्रसादात् विषयेषु भान्ति वि
ज्ञानक्रियेच्छा उदयन्तिनृणां त्वत्त स्समस्ताः प्रभवन्ति शक्तयः
भाग्यान्यशेषाणि फलन्ति भूरिशो वि
तनोषि कृत्यान्यध पञ्च तायसे विश्वात्मना त्वं प्रकृति ञ्च पूरुषम्
स्वतेजसा सन्नयसे यथेच्छं वि
प्रकाशयस्यर्कमहोयशश्श्रिया वर्णात्मनाऽऽदित्यगता त्रयीमयी
अर्थानशेषा नवबोधयस्यहो वि

श्रद्धां तथा सोम मपोन्न मिद्धं वीर्यं हवि ष्षद्स्वनलेषु पद्मे
अस्य स्यहो भोक्त्रनुभोगदात्रीं वि
तात्पर्यभूमीश्च समस्तवाचां त्रिधा विभिन्नस्य पशो र्यथास्वम्
रूपस्य दात्रीं जगतः प्रतिष्ठां वि
त्रैगुण्य मन्नं प्रददासि लोके षाड्गुण्य मन्नं परमे च व्योम्नि
त्वमेव सोमार्यमवह्निशक्तिः वि
रूपेण कीर्त्या जगत श्श्रिया च पोषं करोषि प्रकृतिं पुमांसम्
कालं सदा धारयसि स्वशक्त्या वि
परिच्छिनत्सि स्वय मध्वषट्कं प्रपन्नकोटिं भववारिराशेः
त्वमेव सन्तारयसि प्रसादात् वि
सुवोऽपरं तत्परमं सुवोपि पुण्यात्मने ब्रह्मविदे ददासि
प्रधानजीवाद्यवलम्बनं त्वं वि
प्रसूयसे सर्वहितायतत्त्वं भुक्त्यां ब मुक्त्या रमयस्यजस्रम्
नियच्छसि त्वं सकलं नियत्या वि
द्विधा त्रिधा वा बहुधा विवृत्ता मेका मनीशां महती मणीयसीम्
सर्वात्मभूतां चिदचित्स्वरूपां विश्वारणिं त्वां शरणं प्रपद्ये
स्त्रीपुंसरूपां तदतीरूपां ज्ञानक्रियानन्दमयीं पुराणीम्
व्यूहेश्वरीं वर्णपदाकृतिं तां विश्वारणिं त्वां शरणं प्रपद्ये
हरे स्सिसृक्षाकृति माचरन्तीं तथा सुषुप्सा श्च विभावयन्तीम्
शान्तोदितावस्थिति भासमानां विश्वारणिं त्वां शरणं प्रपद्ये
अनन्तकल्याण गुणाम्बुराशि मनन्तमन्त्राक्षर भासमानाम्
अनन्तयन्त्रै रभिगम्यमानां विश्वारणिं त्वां शरणं प्रपद्ये
खेटं कृपाणं शरशूलचापान् चक्रं दरं पाश मधाक्षमालाम्
कीरं वराभीतिघटान् दधानां विश्वारणिं त्वां शरणं प्रपद्ये

अनन्तकोटीन महस्स्रवन्तीं मनन्तकोटीन्दुरूचिद्रवन्तीम्
अनन्तकोटीचपलाप्रणालीं विश्वारणिं त्वां शरणं प्रपद्ये
अप्राकृताचिन्त्यमहामहिम्नां भूमिं परां वाङ्मनसाति भूमीम्
पञ्चक्रियानिर्वहणैकतानां विश्वारणिं त्वां शरणं प्रपद्ये
महालक्ष्मि तवैवेदं भावये रूप मुज्ज्वलम्
कोट्टिसूर्यप्रकाशाभं कोटीरम्मद सन्निभम्
कोटीन्दुसुषमालीढं महः पश्यामि तावकम्
उपासनायोगशक्त्या त्व त्प्रसादितया रमे
स्थावरा जङ्गमा भूयो भूर्भुवस्स्वर्मुखा स्तथा
ऊर्ध्वलोका अधोलोका स्सागरे बुब्दुदाइव
अहो पश्यामि नैकानि ब्रह्माण्डानि तवोदरे
भ्राम्यन्ति नियतं मातः कोटिशः कोटिशो रमे
अङ्गोपाङ्गेषु सर्वेषु देवदानवमानवाः
सौम्यासौम्या विलोलन्ति क्षुद्राक्षुद्राश्चं शक्तयंः
आदित्या वसवो रूद्रा लोकपाला दिगीश्वराः
यक्षकिंनरगन्धर्वा नागा अप्सरसो नराः
पशुपक्ष्यादय स्तत्र भवन्ति च पुर स्तिरः
अहो पश्यामि सर्वेशि विश्व मेव तवाकृतिम्
अग्नि स्ते वाक् मरूत् प्राण स्सूर्य श्चक्षु र्मन श्शशी
दिशश्श्रोत्रं जलं रेत श्शरीरं पृथिवी तव
ओषधीवनस्पतयो लोमा नीन्द्रो बलं रमे
अभ्रं शिर स्तवेशानो मन्यु रात्मा स एव च
पातालं पादमूलं ते प्रपदञ्च रसातलम्
महातलञ्च ते गुल्फौ जंघायुग्मं तलातलम्

जानुनी सुतल मूरू वितलातल मिन्दिरे
महीतलञ्च जघनं नाभिरेवनभस्तलम्
विभासते विश्वमूर्ते ! ज्योतिश्चक्र मुरस्स्थलम्
महो ग्रीवा जनो वक्त्रं ललाटं तप एवच
शिर स्सत्यं श्रव श्शब्दो नासा तेऽ श्विनौ प्रसु !
अग्नि मुखं दृशौ द्यौश्च अहःपक्ष्म स्तनौ वृषः
वारिवाहा महाकेशा श्वसितं मारूत स्तव
नाडीजालानि सरितः पर्वता अस्थि सन्ततिः
यज्ञाङ्‌गानि तवाङ्गानि यज्ञस्यात्मात्वमेव हि
आज्यं घ्राण श्चिती वक्रं यूपा दन्ता स्तवेन्दिरे
क्रिया सत्रं लसन्नासा जिह्वाऽग्नि ब्र्ह्म मस्तकम्
उद्‌गाताऽसृग्धरा सोमो रक्तं स्कन्धौ वितर्दिका
प्रायश्चित्तं नखा देवि घोष स्ते साम एव च
मातृकामन्त्रबीजानि मन्त्रा मन्त्राधिदेवताः
मन्त्राणां शक्तयश्चापि त्वा मेवोपासते रमे !
सर्वा भाषा विभाषाश्च श्रुतय स्स्मृतयोऽपि च
इतिहसाःपुराणानि स्तुवन्ति त्वां परात्परे
ध्यायन्ति कवयो मूर्तिं वाङ्‌गयीं प्रतिभादृशा
अहो रूप महोतेजः अहोशक्ति रहो बलम्
अहोमयं समस्तं ते सर्वज्ञोऽपि न बुध्यते
त्रस्यन्ति केऽपि दृष्ट्वा त्वां केऽचि त्वां प्रणमन्ति च
केऽपि स्तुवन्ति सूक्तै स्त्वां केऽपि त्वा माविशन्त्य पि
ऋचःकेचिद् यजुःकेचित् साम केचिदथर्व च
पठन्ति केऽचि न्मुनयः ऋषयो ब्रह्मवादिनः

पठन्ति केऽपि श्रीसूक्तं नृसूक्तं केचनारूणम्
पञ्चोपनिषदःकेचिद् रूद्रं केऽपि पठन्ति च
नासदीयं मुषस्सूक्तं केचिद् दुर्गां जपन्त्यपि
वाक्सूक्तं रात्रिसूक्तं च भावयन्ति सरस्वतीम्
प्राणसूक्तं स्कम्भसूक्तं मग्निसूक्त ञ्च केचन
जपन्ति केचि दैन्द्राणि वारूणानि च केचन
कोटिकोटि शिरोवक्त्र दृक्पाणिचरणोदरम्
विश्वतोमुख माकारं पश्याम्यद्भुत दर्शनम्
बहुबाहु मुखग्रीवा पदोदरदृगाकृतेः
आदिं मध्यं न पश्यामि न चान्तं तव भार्गवि !
प्रलयाग्निकरालानि दंष्ट्राभीलानि माधवि !
मूर्छन्ति दृष्ट्वा वक्त्राणि कालरात्रिमुखास्तव
कामेश्वरी रक्तदन्ता छिन्नमस्ता च तारका
धूमावती च बगला मातङ्गी भुवनेश्वरी
भद्रकाली कराली च त्रिपुरा च स्वयंवरा
कालरात्रि र्महारात्रि श्चामुण्डा गुह्यकेश्वरी
कपालिनी चित्रघण्टा भीमा शाकम्भरी क्षुधा
कूष्माण्डा यमघण्टा च नन्दा मारी महोदरी
शीतला च महामारी चान्यान्यावेशशक्तयः
तवाकृतौ बिभासन्ते ज्वलनेविस्फुलिङ्गवत्
कोटिशम्पालताकीर्णं कोटीरम्मदसंकुलम्
कोट्यग्नि कीलमालाढ्यं प्रशान्त मपि भीषणम्
अनादि मप्रमेयञ्च अनन्त मप्रधर्षितम्
दृक्शक्तिहरणोदग्रं विश्वरूपं तवेन्दिरे

ऋतम्भराप्रसादेन त्वत्कृपाप्रभविष्णुना
भावये वर्णये देवि ! तव विश्वमयं वपुः
ओंकारवाच्ये श्रीदेवि शुद्धसत्वस्वरूपिणि!
कारणानां कारणं त्वं महालक्ष्मि प्रसीदमे
महायोगिहृदाकाश विद्युल्लेखाचमत्कृते !
अनेकतापसंघाततूलवातूलरूपिणि !
स्मितरेखापरीवाह द्राकोदित्वरचन्द्रिके !
नेत्राञ्चलसुधापूर शिशिरीकृतविष्टपे !
शाङ्गटङ्कारनिर्भिन्नक्रव्यादश्रोत्रगह्वरे !
तटिन्नटत्कृपाणाग्रखण्डितक्षितिकण्टके
उपासीनमनोबर्हिप्रावृषेण्यघनाघने !
सर्वलावण्य सौन्दर्यशेवधे सुप्रसीद मे!
त्वमेव सर्वभूतेषु प्रज्ञा श्रद्धा स्मृति र्धृतिः
तुष्टि : पुष्टिः क्रियेच्छासि क्रान्ति श्शान्ति स्त्व मिन्दिरे
भ्रान्तिः ख्यातिः कृपा संविद् ओज स्तेजो सि चेतना
माया विद्या क्षुधा तृष्णा छाया संज्ञा ऽ सि शेमुषी
क्षान्ति श्शक्तिः प्रवृत्ति स्त्वं वृत्ति र्लज्जा ऽ सि धारणा
कीर्ति र्भुक्ति स्त्वमेवासि प्राणाशक्ति स्त्व मिन्दिरे !
नम स्तुभ्यं महालक्ष्म्यै पद्मायै सन्ततं नमः
नमः काल्यै भद्रकाल्यै महाकाल्यै नमो नमः
नमः प्रकृत्यै विकृत्यै विद्यायै करूणादृशे
नम श्शक्त्यै महाशक्त्यै महाधृत्यै नमो नमः
क्षेमंकर्यै च भक्तानाम् ऋद्ध्यै सिद्ध्यै नमो नमः
नमो ऽर्कबिम्बदीप्रायै महसां स्रोतसे नमः

इन्दुमण्डल लासिन्यै ज्योत्स्ना धुन्यै नमो नमः
शान्त्यै दान्त्यै प्रसन्नायै करालायै नमो नमः
सौम्यानां सौम्यरूपायै सावित्र्यै च नमो नमः
नमो हंस्यै महाहंस्यै वाग्वादिन्यै नमो नमः
नमो वागीश्वरेश्वर्यै सरस्वत्यैनमो नमः
नमः परायै पश्यन्त्यै मध्यमायै नमो नमः
वैखर्यै च नम स्तुभ्यं सर्ववाङ्मयमूर्तये
नमः परस्यै प्रकृत्यै गायत्र्यै च नमो नमः
नमो विश्वप्रतिष्ठायै विश्वस्यै च नमो नमः
सर्वतन्त्रस्वतन्त्रायै सर्वज्ञायै नमो नमः
नमस्सर्वैश्वरेश्वर्यै सर्वायुधधृते नमः
प्रपन्नार्तिहरायै ते प्रसन्नाक्ष्यै नमो नमः
सत्यसङ्कल्पकामायै सच्चिदानन्दमूर्तये
सत्यधर्मप्रतिष्ठायै नम स्सत्यात्मने नमः
नित्यनिर्दोष निस्सीमकल्याणगुणसिन्धवे
समस्तलोक चैतन्य वाहिन्यै ते नमो नमः
तन्त्रायण्यै च विद्महे ज्योतिष्मत्यै च धीमहि
तन्नो लक्ष्मीः प्रचोदयात्
सर्व धर्मान् परित्यज्य मामेकं शरणं व्रज
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुच
सर्वधा त्व मृमान् त्यक्त्वा - अपेभ्यां सर्वपा मुमाम्
शरणं भजस्व मामेकम् उक्षयिष्यामि पापतः
इति त्वया प्रतिश्रुतं श्लोकार्थं परमं रमे
स्मारं स्मारं प्रपद्ये ऽ हं त्वा मेव शरणं प्रसु !
शब्दार्थभावबंहिष्ठे र्भावनास्पन्दतुन्दिलैः

ज्योतिष्मतीं श्रियं श्लोकै रस्तौद् विजयसारथिः

### प्रथमाविभक्तिः

जयति विनीलनीलधरचारुशरीररुचि, र्बृहत्कृपा
श्रयहृदयः प्रपन्नजनरञ्जनमञ्जुलमानसः प्रभुः
स्मयमददूरवृत्ति, रतिशान्तरतो, वरवेंकटाचल
प्रियवसती रमापति ररिष्टहरो जगदीश्वर स्सदा

### कलिका

अपिच मंगलदेवताहृदयाब्जमधुमाद्यन्मिलिन्दः
तपनकोटिद्युतिनिषेवितधाममयवदनारविन्दः
वेंकटाचलशिखरमन्दिरविहरमाणविलासमूर्तिः
किंकरीकृतपंकजासनशंकरादिकदिव्यमूर्तिः
भक्तनेत्रचकोरसंततिपर्वपूर्णशरत्सुधांशुः
भक्तहृदयांभोभवाकरभासनोद्यतलोहितांशुः
मुक्तिकामुकनिजपदाश्रितयुक्तमानसराजहंसः
व्यक्ततेजोलवविधूतनिवातकवचविरोधिकंसः

### उत्कलिका

कलियागार्तोद्धरणदीक्षित
कलिमदापहनिशितवीक्षित
नतजनावनललितवीक्षित
यतिपतिप्रतिभासमीक्षित
दररथांगगदासिभासुर
करसरोरुहसंहृतासुर
भुवनरक्षाव्रतधुरीणः
भुवनमायाबन्धरीणः

## द्वितीया विभक्तिः

भक्ताभीप्सितपूरणैकनिरतं भक्तोपदाग्राहिणं
भक्तार्तोद्धरणाय वेंकटगिरिं प्राप्तं मुमुक्षुप्रियम्
व्यक्ताव्यक्तपरापरार्थघटनाव्यासञ्जितश्च स्वयं
व्यक्तं मञ्जुलमङ्गलाकृति महं पद्मापतिं भावये

### कलिका

अपिच परमतपोबलज्ञानामलानन्दादिपूर्णं
कृपणजनतावनपरायणनिपुणताघनतावकीर्णं
अलितमालेन्दीवरातसिजलदजित्वरचारुसुषमं
विलयकालचराचरात्मकविश्वसंहरणैकविषमं
गिरिशावत्सविरिञ्चिधेनुक्षीरधारापुष्टमूर्तिं
हरगिरीशामरझरीसुरकरटिहिमरुचिजेतृकीर्तिं
रासकेलीनिरतवल्लवरमणिनिकरोल्लासमानं
व्यासनारदभृगुपराशरवामदेवोपास्यमानं

### उत्कलिका

अभयमुद्रास्वस्तिकाञ्चित
सभयसंश्रितपालनाञ्चित
खिन्नजनतावनपरायण
सन्नतावनकृतितुरायण
नवनवोन्मेषत्विडञ्चित
रविसुतारसरागरञ्जित
नित्यनूतनचारुसुषमं
सत्यशिवसौन्दर्यसुषमम्

## तृतीया विभक्तिः

सत्यं यस्य विराजते मह इदं संसारमूलं यतो
नित्यं व्यक्त मसच्चिदप्यहरहो नेतुः परिद्योतते
दैत्यध्वंसि च यच्चरित्रमसकृत् तै स्स्तूयते दैवते
स्सत्याख्येन च वेंकटाद्रिपतिना संगच्छतां चित्सती

## कलिका

अपिच वकुलमालिकाह्रयादयानिभालितेन
निपुणयतिपतिप्रतीतनिचितभोगलालितेन
निगमचोरहननधातृनिगमदानतत्परेण
अगमकृतपयोधिमथनहवनकृतिधुरंधरेण
बलकटीकृताचलोरूभर्मनयनमारणेन
कलुषमन्दविरोधकुटिलकनककशिपुदारणेन
सकलसुरविरोधिबलिरसातलप्रयापकेन
सकलविकलकुपितनृपतिसन्ततिप्रमापकेन

## उत्कलिका

क्रूरदशमुखादिहनन
घोरचेदिपादिखनन
दुष्टमतिविमोहदान
रूष्टयवनजनविशासन
कर्मसुव्रतैकतान
धर्मपालनैकतान
वेंकटाचलाधिपेन
पंकजासनाधिपेन

## चतुर्थी विभक्तिः

श्रीकल्याणगुणाकराय, भुवनक्षेमंकरप्रक्रिया -
व्याकोचत्करूणारसार्द्रहृदयव्यायोगपूर्णात्मने
पाकारिप्रमुखामरालिनिलयप्राज्यस्वरङ्गालक -
प्राकारायितविक्रमाय निखिलब्रह्माण्डनेत्रे नमः

## कलिका

अपिच चन्द्रिकातपावहानुरूपलोचनाय
त्रपितहृदयनिचयकृतसुधारसाभिषेचनाय
स्वातिदूषिदोषिबाणबाहुनिवहभञ्जनाय
स्वातिभक्तिमुक्तिनिरतसदयहृदयरञ्जनाय
सकलनिगमसारभूतसत्यतत्वबोधकाय
सकलसुकलसूरिकुशलसरलसौख्यसाधकाय
भक्तवत्सलप्रपन्नपरमभोग्यविश्रुताय
शक्तियुक्तिभुक्तिमुक्तिसक्तभक्तसंस्मृताय

## उत्कलिका

परमयोगजगदुपाय
परिहृतार्तजगदपाय
विततभुवनभरितमाय
सततसर्वधानपाय
सुखितसकलमुनिनिकाय
नखविदीर्णदनुजकाय
मत्तदितिजभेदनाय
सत्तमानुमोदनाय

## पञ्चमी विभक्तिः

श्रीमद्वेंकटनायकात् श्रुतिनुतश्रीकात् जगत्संभव
स्थेमोज्जासनकारणात्, सुमनसां श्रेयःपदप्रपकात्
सीमातीतमहोयशोबलतपश्श्रेयोदयायोदयात्
श्रीमान्यात् परमप्रपन्नरसिकात्, सेव्यः परो नास्ति मे

## कलिका

अपिचोज्ज्वलमणिहारमनोज्ञात्
अपराजितविनुतामलसंज्ञात्
परमज्ञानैश्वर्यानन्दात्
परमकृपावितपण्डितबृन्दात्
परमव्योमविभासुररूपात्
परममुनीशप्रणिहितरूपात्
आमोदादिविहारविलोलात्
सामादिश्रुतिसंनुतशीलात्

## उत्कलिका

नतहितकामित
ततिपूरणरत
वरवरमुनिनुत
सुरपरिबृढनत
लीलामानुष
हेलापूरुष
जगतीपालात्
जगतीमूलात्

## षष्ठी विभक्तिः

माया यं नहि वेत्ति वेत्ति सुतरां मायास्वरूप ञ्च यो
माया यं नहि सौति सौति किल यो मायां जगन्मोहिनीं
मायावादवदावदोऽपि नहि यन्माया मतिक्रामते
ध्येयस्यात्मनि वेंकटाचलपते र्दिव्यांघ्रियुग्मं भजे

### कलिका

अपिच मूलदासहृदयहर्म्यनिरतविभ्रमस्य
कुपितकुमतिदितिजहरदकुण्ठितोग्रविक्रमस्य
विमलकमलदलविलोलविततद्ध्रमारतस्य
समणिहारमकुटवलयचारुभाविभासितस्य
वनचरावगम्यरम्यमनुजवेषभूषितस्य
कनदुदारचारुहारिकप्रकम्रभाषितस्य
अखिलवाङ्मयप्रतिष्ठितात्मतत्वभासनस्य
निखिलपुरुषचित्तवृत्तिनिर्णिरोधशासनस्य

### उत्कलिका

विदितनिगमसद्रहस्य
सदयमोदकृद्यशस्य
निजविभावकृतवयस्य
विजय, निखिलमुनिनमस्य
मान, सवनसंप्रशस्य
मान, भक्तभावसस्य
जलदसमनिरीक्षणस्य
जलजविपुलवीक्षणस्य

## सप्तमी विभक्ति :

परमे यस्य विशालकुक्षिकुहरे ब्रह्माण्डभाण्डावली
सुरमार्गे जलदावली, जलनिधौ शुद्धोर्मिमालेव च
परिधिं यान्ति पुरस्तिरोभवमयं ब्रह्मादिमूले परे
वरदे वेंकटवल्लुभे मम परा भक्ति स्सदा द्योतताम्

## कलिका

अपिच विनतजनानुपालनविविधवेषविलासललिते
निपुणजडधनिनिस्वसमनिर्णिद्रनिजवात्सल्यकलिते
प्रकृतिसुन्दरमधुरबृन्दावनविनोदविमोदरसिके
विकृतिरहितासेचनकनववेषमोहितभवविरसिके
मुरलिमधुराराववविवशितमुदितवल्लुवरमणिहृदये
हरपितामहनिगममकुटाविदितविशदोदारहृदये
अरिचिरण्टीचिकुरतिमिरमदापहोज्ज्वलितप्रतापे
निरतिशयनिरपायनिरवधिनिरूपमानपमस्वरूपे

## उत्कलिका

सुरवरानलयमनिशाचर
वरूणवायुकुबेरपुरहर
हिमकरार्यमधातृमुखसुर
समयताराब्न्धिनाब्धर
धरणितेजोगगनशंबर
हरिदचिच्चिन्मयचराचर
पूर्णरूपकलांशशालिनि
पूर्णरूपानन्दशालिनि

## संबोधनप्रथमा विभक्तिः

नालं व्यालपति र्दलानि हरितोऽनन्ताधर : कर्णिका
नीलाभ्रं भ्रमरोऽध यस्य सरितो निर्यन्मरन्दोद्गमाः
नीलानाथ ! समुद्धरन् कुवलयं नीराकराद् दंष्ट्रया
लीलाकोल ! वृषाचलेश रमसे लीलाविभूत्या सदा

## कलिका

अपिच वाराशिजाहारिरूपोल्लास
विपुलतेजोयशोवीर्यसारोल्लास
पद्मावतीहृदयपद्मवनकलहंस
पद्मनाभाच्युत स्वप्रभाजितहंस
शुद्धसात्त्विकरूप सिद्धादिदुरवाप
बद्धकृतसन्ताप विद्धतामसभूप
रासकेलीलोल दासपालनशील
व्यासनुतगुणजाल भासितामलहेल

## उत्कलिका

राधाहृदरविन्द
बाधाहरमिलिन्द
रदनापजितकुन्द
मदनतातमुकुन्द
भक्तजनमन्दार
मुक्तिमुखसिन्दूर
वेंकटाद्रिविहार
पंकेजमणिहार

## सार्वविभक्तिकम्

विश्वं योविदधाति पाति तुदते वेदा य मीशं जगुर्
विश्वं येन सुधार्यतेऽभिद्धते विश्वेऽपि यस्मै नमः
शश्वद् यान्ति यत स्सुखं सुमनस स्स्वस्वं जगद् यस्य वा
विश्वं यत्र विभाति स त्व मव मां विष्णो वृषाद्रीश्वर

वेंकटनायकगुणमणि
खचितं सुवर्ण मिद मनिशं जयतात्
विजयसारथिविरचितं
पण्डितहृदयाभरण मुदाहरणम्

## प्रथमा विभक्तिः

जयता च्चारुशिरीषपेशलवपु स्संसारवाराशिनौ
स्स्वयमाविष्कृततत्तदाकृतिमहस्सन्धानमर्मैकवित्
दयमानानुपमानमानहृदयो धर्मप्रियो मैथिली
प्रिय ईशानपितामहदिविनुत श्श्रीरामचन्द्रप्रभुः

## कलिका

अपिच सकलजगज्जनावननिपुणमायामनुजरूपः
अपरिमितबलसाहसोत्साहादिसंपूर्णस्वरूपः
कुशिकसुतकृतसवननाशनकुटिलपलभुङ्निवहहन्ता
वशिशिखामणिदारशापनिवारणाद्भुतशक्तिरन्ता
सकलनृपचयभयदशांभवचापखण्डनलब्धकीर्तिः
विकलजनकमनोनुरञ्जनविविधगुणमणिपूर्णमूर्तिः
जनकजाललनामनोहरचारूलावण्याभिरामः
अनुपहतनिजबलपराजितघनरूषागतपरशुरामः

## उत्कलिका

परमहितगुहहृदयरञ्जन
परमहर्षिमनोनिगुञ्जन
मुनिमनोहररूपसुन्दर
दनुजजलनिधिमथनमन्दर
विनतलक्ष्मणपर्युपासित
मुनिवरोचितवेषभासित
महितगौतमविनुतचरितः
सहजसौजन्यादिभरितः

## द्वितीया विभक्तिः

सुमनश्चातकमोददं जनकजासौदामनीमानितं
सुमनःकेकिविलासदं परकृपाशुद्धामृतस्यन्दिनम्
समदारून्तुदगर्जितं शुभकरं शार्ङ्गेन्द्रचापोज्ज्वलं
कमनीयं रघुरामवारिद मिलाक्लामापहं भावये

### कलिका

अपिच खरदूषणाद्यरिनिकरमारणं
सपदितापसलोकसंतापवारणं
कनकमृगरूपधरकर्बुरभयंकरं
हनुमदर्कतनूजहरिहृदभयंकरं
अभियातिनेमबलहरवालिबर्हणं
अभयदानप्रीतहरिकृताभ्यर्हणं
हनुमदानीतभार्यावृत्ततोषितं
विनतसागरराजविनुतिमणिभूषितम्

### उत्कलिका

कृतजलधिसेतुपद
नतविभीषणवरद,
विधुतकपिबलघोष
बधिरीकृताशेष
ककुबन्तराल, लय
विकटरूद्रातिभय
करवीर्यराजितं
सुरराजिपूजितम्

## तृतीया विभक्तिः

ललिते यस्य विशालकुक्षिकुहरे ब्रह्माण्डजालं क्वचि
ज्जलविस्फोटसमं विभाति गिरिभिच्छर्वाजमुख्या स्सुरा :
जललेशा इव सन्ति राजतितरां संसारमाया क्वचित्
जलधारेव च तेन रामविभुना संस्पर्धते कोऽमुना

### कलिका

अपिच सबलकुंभकर्णकादिदानवार्दनेन
कुपितकुटिलरावणादिघोरदनुजमर्दनेन
विनतमौनिसुरनरादिविविधसुजनसन्नुतेन
अनंलशुद्धजनकजामहासतीसमञ्चितेन
स्वकवियोगखेदभरितभरततापभञ्जनेन
विकचनयनविकचहृदयविविधमनुजरञ्जनेन
जलधिवलयवलितसकलधरणिराज्यशासनेन
ललितरीतिनिगमनीतिलालनैकभासनेन

### उत्कलिका

मदनमदनमुग्धरूप
विदुरविदितसुस्वरूप
दलितदिविजविविधताप
मलिनचरितविहितकोप
धृतजगद्विरोधिरोप
हृतदरिद्रतादिलोप
विकटविमतखण्डनेन
सकलनृपतिमण्डनेन

## चतुर्थी विभक्तिः

रामायामलमौनिचिन्मयपिकारामाय वर्षाबुद
श्यामाया प्रमितप्रमाय सुमनश्श्यामालिकामाय ते
सोमास्याय सदाविताश्रितनतस्तोमाय संपद्गुण
ग्रामाय प्रतिपन्थिभीतिकरसंग्रामाय नित्यं नमः

## कलिका

अपिच वीरारिनिवहाभीलजन्याय -
रिपुजनक्षमणातिरिक्तसौजान्य
अकलंकचरितनृपनिकरसंमान्याय
विकटसंगरवीरविसराभिमान्याय
सकलमानवलोकसमयैकधन्याय
विकचप्रभावहृतविविधनैर्धन्याय
अतिलोकगंभीरतातिनैपुण्याय
सततसंसारपरिचर्यैकपुण्याय

## उत्कलिका

अतिमोहनच्छाय
कृतजगंत्प्रच्छाय
बुधरताभिप्राय
विधुतदुरभिप्राय
प्रदितजगदन्याय
विदितनिगमन्याय
घनताभिरामाय
जनकाजारामाय

## पञ्चमी विभक्तिः

पुरूहूतानलदण्डपाणिनिकषापुत्रप्रचेतोमरू -
न्नरवाहप्रमथाधिपांबुभवभूनानासुरोपासितात्
स्मरतातान्निखिलाण्डगोलभरणस्फायद्विशालोदरा
न्नरसिंहात् जगदीश्वराद् रघुवरान् नान्यत् परं दैवतम्

## कलिका

अपिचावनिजाह्लादधुरीणात्
विपुलगुणोज्ज्वलविभवारीणात्
रविकुलजलनिधिराकाचन्द्रात्
अवितपितामहहरविबुधेन्द्रात्
अतिकोदण्डकिणांकितबाहात्
विततपरार्चाविभवव्यूहात्
परमदयारसभरितदृगन्तात्
स्मरशातमोहनमञ्जिमकान्तात्

## उत्कलिका

हनुमत्सेवित
मुनिसंभावित
गिरिजोपासित
हरचिद्भासित
भवभयवारण
भवसुखपूरण
जलदश्यामात्
कलुषविरामात्

## षष्ठी विभक्तिः

विश्वं यन्महसा बिभाति विविधं विभ्राजते य स्सदा
विश्वस्मिन् जगति प्रधानपुरूषं वेदा स्तुवान्तिस्म यं
शश्व त्सम्मद मभ्युपैति सुमनोजाति र्यत श्श्रीमतो
विश्वामित्रहितस्य रामनृपते र्वेवेत्ति कोवा गुणान्

## कलिका

अपिच वेदबाह्यदुर्णयाधिकारशोषणस्य
स्वपरभेदविरहसकलजन्तुकोटिपोषणस्य
सततसुजनतानपेतसकलसाधुसेवितस्य
विततनिगमनिगममौलिविविधसूक्तिभावितस्य
कठिनहृदयदितिजनिचयगहनवनदवानलस्य
शठनृपालतूलजालचरमदारूणानिलस्य
स्थिरतटिल्लतायुतातिदीप्रशितिवपुःप्रभस्य
तरूणकिरणदुर्निरीक्षतरणिकोटिसन्निभस्य

## उत्कलिका

स्तवसमर्हसुगुणनिचित
कविविरिञ्चनाभिरचित
पविधरामराभिगीत
लवकुशानवरतगीत
नवनवानुभावभरित
भुवनमङ्गलैकचरित
रविकलाब्धिचन्दिरस्य
शिवहृदेकमन्दिरस्य

## सप्तमी विभक्तिः

परमुप्ता सुगुणै स्सुमेरूकुधरं प्राप्ता जगन्मण्डपे
हरिदन्तर्वितता यशोमयलता यस्यान्तरिक्षं गता
परितःकोरकितोडुभिःकुसुमिता भातीन्दुना सर्वदा
वरदे रामपरात्परे स्थिरतरा भक्ति र्मम द्योतताम्

## कलिका

अपिच चारूतरवारिदद्युतिग्लपनधीरमुनिमोहनाकृतौ
जपतपोधृतिसमाधिवैभवप्रथितशक्तिपरमर्षिसत्कृतौ
त्रिविधचेतनपरिग्रहाग्रहद्विविधभावकलनैकतत्परे
विविधमङ्गलगुणक्रियादियुग्विविधभूमविलसत्परात्परे
निगममौलिकुलनिश्चितामितप्रगतितत्त्वसुषमैकभूषणे
निगमदूरमति दुर्विधोद्यमान्वितमनस्कधिषणाभिदूषणे
ललितवीक्षितकृपासुधारसोल्लुलितचित्तनतभक्तहृद्यते
कलुषवृत्तमदखण्डनस्फुरत्कठिनशासननिभालनोद्यते

## उत्कलिका

निशितधारकरवालकृत्तदुः
पिशितघस्मरसुराभियातिदुः
प्रसृतशोणितनिधौतधारणी
कुसृतिरूपककलङ्क पारणी
कृतनृपालकयशश्चरित्रक
प्रततकल्मषलतालवित्रक
द्युतिशतावृतनिटालभासुरे
सततरञ्जितविशिष्टभूसुरे

## संबोधनप्रथमा विभक्तिः

श्रीमन् राघव कूर्मपादनियत श्शेषावलंबोद्यतः
भूमीपात्रयुतोऽब्धितैलभरितो भूध्रेन्द्रवर्त्युज्ज्वलः
व्योमैकाञ्जनसंयुतो दिनमणिज्योति स्समुद्योतते
ते मायावितमोनिरासनपर स्तेजःप्रदीप स्सदा

### कलिका

अपिच चूडालंकृतामूल्यकोटीर
सपदिमोदिततुराषाडजजटाटीर
सत्यसुन्दरशिवस्फाररूपोदार
यत्यमलभावनानृत्यत्कलोदार
नतदयामृतपूर रतदृश़ाकर्पूर
कृतिमानसविहार हिततापपरिहार
भृतविनतबृन्दार नतलोकमन्दार
कृतिसस्यकेदार कृतकसवभूदार

### उत्कलिका

श्रुतिमौलिनुतशील
हतदेवरिपुजाल
विततविष्टपमूल
धृतहेममयचेल
सीतासतीलोल
शीतांशुसमभाल
धामद्रुमावाल
रामावनीपाल

## सार्वविभक्तिकम्

श्रीरामो दयतां पुराणपुरूषं श्रीरामचन्द्रं भजे
श्रीरामेण कृतं जग न्मम नम श्श्रीरामचन्द्राय ते
श्रीरामा न्मुद मेमि सन्तत महं श्रीराम ! दासोऽस्मि ते
श्रीरामे हृदयं विभात्वविकलं श्रीरामचन्द्राव मां

## कलिका

अपिच परममनुजमूर्ति रपहताश्रितामरार्ति
रपजितामृतांशुकीर्ति रपगताचलाधिजूर्ति
रमलहृदयविनुतनीति ममरजयविधायिवीति
ममितपरमसुषमजूति ममलचिन्मम स्तवीति
मरिमजनिमविरहितेन हरिमगरिमपरिचितेन
भरिमवरिमसमवितेन परमधरिमविलसितेन
सततमुदितकर्वराय समुदितातिवर्वराय
अतिनिरस्तगर्वराय हतवियातशार्वराय
अविनबर्हिजलमुचोपि
सुवनकोटिसमरूचोपि
परमपदविराजितस्य
चरमपदसभाजितस्य
अगणितानवधिकधाम्नि
निगममहितपरमभूम्नि
भुवनभवनरासमान
सवनहवनभासमान
श्रीरामचन्द्रगुणमणि
निचितं सुवर्ण मिद मनिशं जयतात्

## प्रथमा विभक्तिः

जयति भुवनदीप स्संहृतार्तानुतापः
नियमधुतविकारो निश्चिताम्नायसारः
प्रियवचनवितानः प्रीतसूरिप्रतानः
स्मयहरयतिवर्य स्स्वामिरामानुजार्यः

## कलिका

अपिच वौदकविपणिहीरः
नृपशुसंस्करणैकधीरः
परमसात्त्विकपथविहारः
चरमपदरतसाधुहारः
भवविकारविभावदूरः
त्रिविधसंज्वरतिमिरसूरः
श्रुतिमनोहरततविचारः
श्रुतिशिरोमतकृतविचारः

## उत्कलिका

चेतनोद्धर
णातिमतिधर
शमदमाकर
समशिवंकर
यमिमनोहर
सुमतिभयहर
सुगतिसारः
प्रगतिकारः

## द्वितीया विभक्तिः

श्रीरामप्रियसेवनैकहृदयं श्रीकेशवार्यात्मजम्
श्रीराजीवदलयताक्ष मनघं श्रीरंगराजप्रियम्
श्रीरम्याकृति मुज्ज्वलात्मचरितम् श्रीभाष्यकारं गुरूं
श्रीरामानुजयोगिपुङ्गव महम् श्रीदेशिकेन्द्रं भजे

### कलिका

अपिच श्रुतिललनार्तिविदूरं
श्वपचमहीसुरसममतिसारं
काषायांबरवेषमनोज्ञं
दूषितनिगमविदूषिप्रज्ञं
तत्त्वमसिश्रुतितत्त्वाभिज्ञं
तत्वपरत्वध्यानोपज्ञं
श्रुतिहितसूक्तिव्रततिविकासं
कृतदुष्पथरतमतपरिहासं

### उत्कलिका

तत्वत्रयगुण
तत्वनिरूपण
तत्वविवेचन
तत्वनिबोधन
निपुणमहामति
विपुलमहस्तति
भासितमूर्तिम्
भासुरकीर्तिम्

## तृतीया विभक्तिः

येनाकारि जग द्विकासकलितं येनैव पूतं जगद्
येनाम्नायगिर स्समन्वययुता येनोद्धृताः पामराः
येनाद्वैतमतं विशेषसहितं येन प्रभुः पालितः
तेन श्रीयतिराजराजमणिना दीनोऽय मुज्जीव्यते

### कलिका

अपिच पूर्वसूरिहृदयहारिभूरिदर्शनेन
विपथरतविरूद्धवादविबुधवदनकर्शनेन
विषमजिनमतप्रवादविपिनदारूणानलेन
विषयलोलगुरूमतद्रुविलयभीषणानिलेन
कुपथपाशुपतमतादिकुधरनिकरपविकरेण
चपलशांकरप्रवादचटुतमोदिवाकरेण
दुरितनिरतसुगतविमतदुष्टभुजगगारूडेन
दुरितविरतवरदनिरतधरणिविबुधपरिबृढेन

### उत्कलिका

कामरहितकर्मयोग
सीमरहितभक्तियोग
परमदास्यनिरतभोग
चरमपदविशिष्टभोग
परिहतेषणार्तरोग
परिहृतार्तविविधरोग
दुष्टवादिभीकरेण
शिष्टवादिभीहरेण

## चतुर्थी विभक्तिः

चिदचिन्नाथविशिष्टतत्वसुषमाजीवातवे सेतवे
मदमोहोग्रभवार्णवस्य भगवन्मायाजगद्वेदिने
स्वदयोज्जीवितचेतनप्रततये सौहार्दवाराश्ये
मदमोहभ्रमभञ्जनाय यतिराण्मान्याय भूयो नमः

## कलिका

अपिच रङ्गपुरराडभङ्गुरानुपमयोगबललालितात्मने
त्रिपुरधस्मरपरत्वखण्डनत्रिपददर्शननिरूपणात्मने
परमवैष्णवपथप्रदर्शनप्रथितदर्शननिदर्शनाजुषे
वरदराजकरूणासुधारसप्रपुषितोपचितचिन्मयत्विषे
सकलवेदमतसारसंग्ररप्रकटनाद्भुतयशोविहारिणे
विकटवादमदमत्तकोविदभ्रुकुटिमात्रपरिभूतिकारिणे
परमसूरिशठवैरियामुनप्रमुखदिव्यमतरीतिपोषिणे
चरमसूक्तिरतदासवासनापरिधिनिर्दलनधीरभाषिणे

## उत्कलिका

चिदचिदीश्वरभिदावबोधन
प्रदितवेदविमतानुरोधन
प्रथितसारतरकीर्तिसुन्दर
व्यथितदुर्विधकुधीपुरन्दर
श्रुतिशिरोभिमतवादकोविद
द्युतिमहोमहितात्मसंविद
प्रकृतिजित्वरगभीरमूर्तये
प्रकृतिसुन्दरमनोज्ञमूर्तये

## पञ्चमी विभक्तिः

कुव्यांख्यानशतै रपार्थघटकैः क्षुब्धा त्रयीभारती
दिव्यानन्द मुपागमद् यदुदयाद् देवादिदेवो मुदम्
भव्यं प्राप विषाद मीयु रवनौ पाषण्डषण्डाः परं
श्रीव्याख्यातृमणे स्समो यतिपते स्सेव्योऽस्तिनः को गुरूः

### कलिका

अपिच परंधामाश्रयकारात्
तपनीयोज्ज्वलदपघनरूचिरात्
यादवमिश्रकुमायादलनात्
यादवराजदयावहकलनात्
यवनतनूजाह्लादनलोलात्
अवनिजनोद्धरणाङ्कितशीलात्
स्वानुग्रहहृतसंसृतिबन्धात्
स्वानुग्रहकृतसंस्कृतिबन्धात्

### उत्कलिका

जगदुज्जीवक
नगधरसेवक
नतजनतारक
दुरितनिवारक
श्रुतिमतभूषण
मितहितभाषण
जगदाभरणात्
अगतिकशरणात्

## षष्ठी विभक्तिः

चण्डालादिधरासुरान्त मखिलं संस्कारतोऽपीपवन्
मुण्डिक्षुद्रगूरूप्रभाव महरन् निर्मूल मुद्धूय यः
चण्डांशूद्भटतेजसऽऽन्ध्यभरितं संसार मादीदपत्
पाण्डित्यप्रतिभानिधे र्यतिपतेः पादैकदासोऽस्म्यहम्

## कलिका

अपिच विषमविषयवादमन्तृतानिरोधकस्य
जपतपस्समाधियोगचरमलक्ष्यबोधकस्य
शारदाप्रदत्तंभाष्यकारबिरूदराजितस्य
वारिजोदरैकदास्यभरितचित्सभाजितस्य
व्यासगुरूपराशरादिवचनचणविचक्षणस्य
वासुदेवपरपदार्थिदासहृदयरक्षणस्य
परमभक्तिपरमयोगपरमभोगभूषितस्य
परमशान्तिपरमदान्तिपरमकान्तितोषितस्य

## उत्कलिका

ब्रह्मराक्षसप्रहरण
जिह्मगुरूमदापहरण
सुप्रसन्नसूरिशरण
सुप्रसन्नहृद्विहरण
करसमुज्ज्वलत्त्रिदण्ड
परमदेशिकप्रकाण्ड
त्रिभुवनैकतात्त्विकस्य
त्रिभुवनैकसात्त्विकस्य

## सप्तमी विभक्तिः

सदसद्वादविवादमोदमदिरास्वादावलिप्तात्मदु -
र्मदद्दुर्मोहकुदृक्कुवादजडिमभ्रान्त्यादिनिर्मूलके
चिदचिन्नाथनिरूपणव्रतरते श्रीनाथमोदावहे
मदनातङ्ककरे गुरौ यतिपतौ मद्भक्ति रस्त्वक्षता

## कलिका

अपिच परानन्दाञ्चितचेतसि
कपटात्मकवनकाञ्चनरेतसि
शठरिपुभाषितसारज्ञातरि
शठहठवादविशारदजेतरि
हरपरपामरपरिसंस्कर्तरि
हरिपरतापुनराविष्कर्तरि
अखिलाम्नायसमन्वयकर्तरि
निखिलागममतनिर्णयकर्तरि

## उत्कलिका

घोराशाजल
मारोर्मीकुल
दारावर्तकु
मारग्राहकु
मलजंझाजव
विलयींकृतभव
जलधिवहित्रे
कलुषलवित्रे

## संबोधनप्रथमा

जय रामानुज देशिकेन्द्र सदयस्वान्त स्थितप्रज्ञ हे
जय काषायशिखोपवीतसुषमासार प्रसन्नाकृते
जय वेदान्तविवादनिर्णयपटो षड्दर्शनीतत्त्ववित्
जय संसारमरूस्थलामृतनिधे स्वामिन् त्रिलोकीगुरो

## कलिका

अपिचार्तजनाह्लादविधायक
चपलरिपुञ्जनसद्गतिदायक
संस्कारावलिसंस्कृतपामर
संस्कारोज्झित सौगतडाम्र
मायावादोन्मादनिरासक
श्रेयोवादविशेषविकासक
परमविशिष्टाद्वैतस्थापक
नरसंसृतिनिर्ऋतिनिर्वापक

## उत्कलिका

भारतभूषण
भारतपोषण
परमतखण्डन
हरिमतमण्डन
निगमशिरोनुत
सुगममतोद्यत
नतसुरभूमिज
यतिरामानुज

## सार्वविभक्तिकम्

यतिराजो जगतीं पुनाति, सुमनोहारं यतीन्द्रं भजे,
यतिराजा श्रुतिरूद्धृता, मम मनो यन्त्रे यतीन्द्राय ते,
यतिराज श्श्रुतिसम्मतं मत मभू, दानन्द मेति प्रजा
यतिराजो, यतिराजि भान्ति सुगुणा, अद्धा यतीन्द्राव माम्

श्रीरामानुज गुणमणि
निचितं सुवर्ण मेत दनिशं जयतात्
विजय सारथिविरचितं
पण्डितहृदयाभरण मुदाहरणम्

यदि नाम स्रीसपद्य मुदाहरणप्रक्रियाया मर्हति प्रयोक्तव्यतां, तदेत
दस्मिन् रामानुजोदाहरणे द्वितीयविभक्तिस्थाने पाठकै स्समुपग्राह्यम्।
हरिनियोगा ज्जनोद्धरणाय रामानु -
जार्यरूपेण य स्त्ववंततार
विपरीतमतजात मपमार्गगतवाद
निवह श्च सपदि यो नीरूरोध
आम्नायपाथोधि मवलोड्य सद्भाष्य
ममृतसारं हारि य श्चकार
मतजातिकुलभेद मतिगम्य मनुराज
माबालगोपाल मुपदिदेश
जगति मायाप्रवाद मुत्सार्य निगम -
निगदितं मत मेव यो निश्चिकाय
त मधिगुणमणिमञ्जुल ममलचरित
मादिशेषांशसंभूत मानतोऽस्मि ॥

# श्रीकृष्णकुमार बिडला महाभागस्य

# प्रशस्तिः

माननीय आभिमाननीय भारत देशालङ्कार हीरमणे श्रीकृष्णकुमार बिडला महाभाग !

आर्ष धर्मद्रोहिणि संस्कृत विद्वेषिणि युगे अस्मिन् तस्यैव धर्मस्य संस्कृतस्य संस्कृतेश्च समुद्धरणाय बद्धपरिकराः भवादृशा वदान्यशिरोमणयः अङ्गुलिगण्या इवबिरलविरलाः सन्तीति उक्तिः नात्युक्तिः नवा अनृतोक्तिः भवति। प्रतिवर्षं 'सरस्वती सम्मान' 'वाचस्पति, प्रभृतिभिः पुरस्कारैः विशिष्टान् साहित्यकारान् वरिवस्यतो अत्रभवतो भवतः सर्वोऽपि संस्कृत सारस्वत क विलोकः अधमर्णः कृतज्ञश्च वर्तते।

साम्प्रतं १९९६ तमे वर्षे जनम् इमं वाचस्पति पुरस्कारेण सभाजयतः पुण्यश्लोककोटि कोटीरस्य श्रीमतो धन्यवाद समभ्यर्हितां कृतज्ञताम् आविष्कुर्वता मयाआधमर्ण्यम् अपनोनोत्तुकामेन भवदीया प्रशस्तिः कतिपयैः श्लोकैः क्रियते

************************************

बिडलावंशमणे ! कृष्णकुमार महितोदय !
प्रशस्तिं ते प्रणेनेति कृती विजयसारथिः ॥

हिन्दूवाङ्मय धर्म संस्कृति परित्राणोद्यता ऽ भ्युन्नता
दीक्षा लोकहिते रता जननुता देशप्रतिष्ठावहै :
प्रासादै : परिषद्भि रर्थनिधिभि र्विज्ञान संस्थादिभि :
बिड्ला वंशमणे ! हरित्सु सुयश स्स्तंभान् सरीसर्ष्टि ते ॥

काश्मीर्या श्शिरसि स्रजं विदधती वंग्या ललन्तीं गले,
घूर्जर्या स्सुललाटिकां च, लतिकां काश्या, उरस्सूत्रिकाम्
द्राविड्या, स्सुकपोल पत्ररचनाम् आन्ध्र्या, दुकूलं, नृप
स्थान्या स्ते विजरीहरीति मतिमन् । कीर्तिः प्रसन्ना भुवि ।

पुण्यश्लोकसुधांनिधे ! बहुमुख प्रज्ञावधे ! शेवधे !
भाग्यानां सुकृत श्रिया मुदनिधे ! सद्धर्मचक्रप्रधे !
श्रीमन् कृष्णकुमार ! कर्मठमणे ! संसद्भिभूषामणे !
नानोद्योग पति च्छटा दिनमणे ! चेतस्विचिन्तामणे !

गोष्ठीभिः परितोषयन् बुधगणान् वैज्ञानिकान् मोदयन्
अर्चन् साधुजनान् कवीन् बहुपुरस्कारै स्समाराधयन्
हिन्दूधर्म मवन् विभिन्न विषयान् ग्रन्थांश्च मुद्रापयन् !
पुष्णन् कर्मचरान् भवान् विजयतां बिड्लान्वयाहस्कर ! ॥

धीरोदात्त ! वदान्यकौस्तुभमणे धन्यात्मना मग्रणीः !
गीतासम्मत कर्मयोग परमानुष्ठान पूतव्रत !
श्रीमन् कृष्णकुमार ! जीवतु चिरं भाग्यै रनन्तै र्भवान्
आर्यावर्त तपःफलायित महाबिड्लान्वयाहस्कर ! ॥

यस्मिन् जीविति पूरूषे बहुजना जीवन्ति जीवे दसा
वित्युक्ते र्भवसि त्वमेव परमं लक्ष्यं तवैवाश्रयै
नानन्दीति कृपालुता सुकलता लालस्ति कर्मण्यता
विद्वन्मान्य ! दरीदृपीति सुगुणव्रात स्तरीतृप्यते ॥

दाक्षिण्यं जनताप्रमोद दयितं शीलं गुणज्ञै स्स्तुतं
प्रज्ञा लोकपुरोगति प्रणयिनी कर्तव्यनिष्ठं मनः
व्याहार स्सहजप्रसन्न मधुरः कर्म प्रतिष्ठावहं
चेत्येतत् सकलं धनं भवति ते बिड्लान्वयाहस्कर ! ।।

दीनानां दयसे बुधानुपकरो ष्याजानतो ऽ हंयुतां
नाप्नोषीष दपि स्वयं परहिते कार्ये परं सज्जसि
स्वश्लाघां न करोषि जातु सुजनान् संश्लाघसे ऽ न्यान् नच
क्लेशे शोचसि नापि माद्यसि सुखे पूर्णो ऽ सि सम्द्गिर्गुणैः ।।
आक्रान्तेषु सदस्सु शासनपदे ष्वाधर्मिकैर्दुर्जनैः
हिन्दूधर्म विरोधिभि, र्धनिगणे तत्पक्ष एव स्थिते
पुण्ये प्रव्रजिते सनातनमते ग्लाने चशिष्टे जने
विद्राणे निजसंस्कृतिं कृतिमणे ! त्वादृग् जनो रक्षति ।।

वस्तुत्रय्यवमर्शकं त्रिविध सन्तापापनोनोदकं
ज्यान्यां दुःखचतुष्ट यावगणिनं साहित्य सेवारतम्
धीमन् ! गर्वविवर्जितं ददद्भावभिज्ञ मर्थे शुचिं
पुण्या काऽपि भवादृशं सुकृतिनं माता प्रसूते क्वचा

नानोद्योग महानिकाय्य निवहै र्लोकप्रियंभावुकैः
सर्वेषा मपि सर्वतोमुख पुरोगामित्व संपादकैः
श्रेयोभि र्बहुयोजना सफलता सन्धानकर्मक्षमैः
दारिद्र्यक्षपणव्रतव्यवसितैः पुष्णासि देशं स्वकम् ।।

विद्यावैद्य सुरालयै र्बहुविधैः पान्थालयै स्स्थापितै

नूत्नाविष्करणै र्गवेषणशतै र्वैज्ञानिकै : कारितै :
आम्नयागम दर्शनादि परिषत्प्राण प्रतिष्ठापनै :
दीनानाथजनावनै स्तुलयितुं त्वां को ऽ पि नेष्टे भुवि

वर्धस्वाभ्युदयावहै र्बहुविधै र्लोकोत्तरै : कर्मभि
श्चारित्रं सुगुणाञ्चितं विलसता दादर्शवत् तावकम्
छायेवात्म कलत्र पुत्रककुटुंबं सेवतां त्वां महा
मेधाविन् ! जनताजनार्दनसपर्याधीनभाग्याञ्चित !

कर्मागारशतानि शोधनिलयान् विज्ञान संस्था भिषक्
शाला श्चाभ्युदयावहानपि महाविद्यालयान् पुष्णती
हिन्दू संस्कृति धर्मरक्षणपरा राष्ट्रप्रतिष्ठावहा
बिड्लावंश परंपरा विजयतां शाखोपशाखाञ्चिता ॥
लोकास्वाद्यरसा त्रिकालफलदा वक्रप्रचाराञ्चिता
गंभीराशयबन्धुरा ऽ ऽ र्तजनतातापव्यपोहोद्यता
भावज्ञै : कविभि र्निषेवितपदा हंसै स्सदोपासिता
सोषूयेत सरस्वती ध्वनिभृता श्रेयांसि भूयांसि नः ॥



सरस्वती सर्वजनप्रमोद सुधास्रवन्ती महतां कवीनाम्
महानिधिन्यासकृतां भवादृशां वृता पुरस्कारशतै स्समिन्धाम् ॥

## को विहातुं समर्थः

वल्गूयन्ती मजिररजसा धूसरै रप्युदारै
रंगै र्दीप्रां लुलितलुलितैः फालभागे विशीर्णैः
किञ्चिल्लोलै श्चिकुरनिकरै श्चुम्बनीयां तनूजाम्
आदायार्ध स्फुटितलपितां को विहातुं समर्थः ॥

मन्दं मन्दं गृहपरिसरे निक्षिपन्तीं पदानि
व्यादायास्यं किमपि वदितुं चेष्टमानां वितर्द्याम्
भ्रंशात् सद्यो रूदितविकलां मुग्धमुग्धां तनूजा
मंके कृत्वा ऽ नुनयविमुखः को विहातुं समर्थः ॥

हृद्यै र्भावै रूपचितरसै रीतिवृत्तै रूदारा
मोजस्निग्धां समुचितपदन्यासविच्छित्तिमुद्राम्
विन्नां शय्यां स्वयमिव वधू मुक्तिवैचित्र्यमुग्धां
ज्ञातास्वादो मधुरकवितां को विहातुं समर्थः ॥

श्यामां सद्यस्स्फुटितविचलत् पत्रभंगाभिरामां
रम्यां चञ्चद्भ्रमरकचयै र्दिव्यरागाभिपूर्णाम्
सान्द्रां गन्धच्छुरितरजसा लोललोलाग्रजालां
हस्ते कृत्वानुनयविमुखः को विहातुं समर्थः ॥

वासन्तीषु प्रथितसुमन स्सत्रशालासु तृप्ता
मिष्टाहारै श्श्रुतिहितगिरं व्याहरन्ती मुदात्ताम्
शाखारूढां द्विजपरिषदं केसरार्द्राक्षतै स्तै
राशासानां स्वशुभ मनिशं को विहातुं समर्थः ॥

शुभ्रै स्स्तुत्यां गभीरै र्भुवि कलुषहरै राशयै, रूर्मिकाभि
र्हृद्यां, दिव्यैः प्रचारै स्सकलजनफलाधायिभि श्शोभमानाम्
देवीं पट्टाभिषिक्ता मिवच कविकुलै जीवनै स्सेव्यमानैः
पुण्यां भागीरथीं स्वं पवितु मुपगतां को विहातुं समर्थः ॥